M-2842

| शिर्षक | ग्रंथकार | विषय | विस्तार (पुर्ण/ अपूर्ण) | टिकाकार | आकार | पृष्ठे | लिपी | सामग्री | Lines per page | Letters per line | Condition & age (शके/विक्रम सवंत) | Additional Particulars / Remark |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| श्रीमद्भागवत ~~श्रीमद्भगवद्गीता~~ षष्ठम स्कंध | – | धर्मशास्त्र | पूर्ण | · | ४/५ | ४९० | संस्कृत | कागद | 15 | 62 | | |

यदा भगवान् स्रष्टुमिच्छति तदा रजो वर्धयति । एवं क्रीडितुं सत्त्वं संहर्तुं तमश्च ॥ १० ॥ हे राजन् । अजः प्रधानपुरुषसहकारित्वेन कालं स्वयमेव सृजति । तेन च सुरानीकं वर्धयति असुरादींश्च हिनस्ति ॥ ११ ॥ हे राजन् । एतद्विषये महाक्रतौ पृच्छते युधिष्ठिराय पूर्वं नारदेनेतिहासः उदाहृतः । तं शृणु ॥ १२ ॥ यदा यज्ञे शिशुपालतेजः कृष्णे प्रविष्टं दृष्ट्वा सर्वेषां शृण्वतां सतां युधिष्ठिरो नारदं पप्रच्छ ॥ १३ ॥ १४ ॥

यदा सिसृक्षुः पुरं आत्मनः परो रजः सृजत्येव पृथक् स्वमायया ॥ सत्त्वं विचित्रासु रिरंसुरीश्वरः शयिष्यमाणस्तम ईरयत्यसौ ॥ १० ॥ कालं चरंतं सृजतीश आश्रयं प्रधानपुंभ्यां नरदेव सत्यकृत् ॥ य एष राजन्नपि काल ईशिता सत्त्वं सुराऽनीकमिवैधयत्यजः ॥ तत्प्रत्यनीकानसुरान् सुरप्रियो रजस्तमस्कान् प्रमिणोत्युरुश्रवाः ॥ ११ ॥ अत्रैवोदाहृतः पूर्वमितिहासः सुरर्षिणा ॥ प्रीत्या महाक्रतौ राजन् पृच्छतेऽजातशत्रवे ॥ १२ ॥ दृष्ट्वा महाद्भुतं राजा राजसूये महाक्रतौ ॥ वासुदेवे भगवति सायुज्यं चेदिभूभुजः ॥ १३ ॥ तत्रासीनं सुरऋषिं राजा पांडुसुतः क्रतौ ॥ पप्रच्छ विस्मितमना मुनीनां शृण्वतामिदम् ॥ १४ ॥ युधिष्ठिर उवाच ॥ अहो अत्यद्भुतं ह्येतद्दुर्लभैकांतिनामपि ॥ वासुदेवे परे तत्त्वे प्राप्तिश्चैद्यस्य विद्विषः ॥ १५ ॥ एतद्वेदितुमिच्छामः सर्व एव वयं मुने ॥ भगवन्निन्दया वेनो द्विजैस्तमसि पातितः ॥ १६ ॥ दमघोषसुतः पाप आरभ्य कलभाषणात् ॥ संप्रत्यमर्षी गोविंदे दंतवक्त्रश्च दुर्मतिः ॥ १७ ॥ शपतो रसकृद्विष्णुं यद्ब्रह्म परमव्ययम् ॥ श्वित्रो न जातो जिह्वायां नांधं विविशतुस्तमः ॥ १८ ॥ कथं तस्मिन् भगवति दुरवग्राह्यधामनि ॥ पश्यतां सर्वलोकानां लयमीयतुरंजसा ॥ १९ ॥ एतद्भ्राम्यति मे बुद्धिर्दीपार्चिरिव वायुना ॥ ब्रूह्येतदद्भुततमं भगवंस्तत्र कारणम् ॥ २० ॥

युधिष्ठिर उवाच ॥ अहो भक्तानां दुर्लभा द्विषतोऽस्य कृष्णे प्राप्तिः कथम् ॥ १५ ॥ एतत् ज्ञातुमिच्छामः । द्विजैर्भगवन्निंदया वेनो नरके पातितः ॥ १६ ॥ शिशुपालस्तु बाल्यादारभ्य कृष्णद्वेष्टा तथा च दंतवक्त्रः ॥ १७ ॥ असकृद्विष्णुं शपंतौ तौ नरके न विविशतुः ॥ १८ ॥ एवं सति कथं सायुज्यं प्राप्तौ ॥ १९ ॥ एतद्विषये मे मनो भ्राम्यति ॥ तत्र कारणं ब्रूहि ॥ २० ॥

१ शरीराणि । २ श्वेतकुष्ठम् ।

श्रीशुक उवाच ॥ नारदो राज्ञो वचः श्रुत्वा सर्वेषां शृण्वतां जगाद ॥२१॥ नारद उवाच ॥निंदास्तुत्यादिज्ञानार्थं प्रधानपुरुषयोः कलेवरमज्ञानेन रचितम् ॥२२॥देहाभिमानेन प्राणिनो यथा ममाहमिति वैषम्यं तत्कृतं हिंसादिकं च भवति ॥२३॥ तथेश्वरस्य तु वैषम्यं नास्ति ॥२४॥ अतो वैरेण भयेन स्नेहात् कामेन वा हरौ मनो युंज्यात्॥२५॥यथा मर्त्यो वैरानुबंधेन तन्मयतां प्राप्नोति तथा भक्तियोगेन न॥२६॥यथा कीटो भ्रमरेण

श्रीशुक उवाच ॥ राज्ञस्तद्वच आकर्ण्य नारदो भगवानृषिः ॥ तुष्टः प्राह तमाभाष्य शृण्वंत्यास्तत्सदः कथाः॥ २१ ॥ नारद उवाच ॥ निंदनस्तवसत्कारन्यक्कारार्थं कलेवरम् ॥ प्रधानपरयो राजन्नविवेकेन कल्पितम् ॥ २२ ॥ हिंसातदभिमानेन दंडपारुष्ययोर्यथा॥वैषम्यमिह भूतानां ममाहमिति पार्थिव ॥२३॥ यन्निबद्धोऽभिमानोऽयं तद्वधात् प्राणिनां वधः ॥ तथा न यस्य कैवल्यादभिमानोऽखिलात्मनः ॥ परस्य दमकर्तुर्हि हिंसा केनाऽस्य कल्प्यते ॥२४॥ तस्माद्वैरानुबंधेन निर्वैरेण भयेन वा ॥ स्नेहात् कामेन वा युज्यात् कथंचिन्नेक्षते पृथक् ॥२५॥ यथा वैरानुबंधेन मर्त्यस्तन्मयतामियात॥ न तथा भक्तियोगेन इति मे निश्चिता मतिः ॥२६॥ कीटः पेशस्कृता रुद्धः कुड्यायां तमनुस्मरन् ॥ संरंभभययोगेन विंदते तत्स्वरूपताम् ॥ २७ ॥ एवं कृष्णे भगवति मायामनुज ईश्वरे ॥ वैरेण पूतपाप्मानस्तमीयुरनुचिंतया ॥ २८ ॥ कामाद्द्वेषाद्भयात्स्नेहाद्यथा भक्त्येश्वरे मनः ॥ आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः ॥ २९ ॥ गोप्यः कामाद्भया त्कंसो द्वेषाच्चैद्यादयो नृपाः ॥ सम्बन्धाद्वृष्णयस्स्नेहाद्यूयं भक्त्या वयं विभो॥ ३० ॥ कतमोऽपि न वेनः स्यात् पंचानां पुरुषं प्रति ॥ तस्मात् केनाऽप्युपायेन मनः कृष्णे निवेशयेत् ॥ ३१॥ मातृष्वसेयो वश्चैद्यो दंतवक्रश्च पांडव ॥ पार्षदप्रवरौ विष्णोर्विप्रशापात् पदाच्च्युतौ ॥ ३२ ॥

रुद्धः सन् तं स्मरन् तद्रूपं प्राप्नोति ॥२७॥तथा पुमान् भगवति मनो युंजन् तत्स्वरूपतां प्राप्नोति ॥२८॥ द्वेषादिभिः परमेश्वरे मनः स्थापयित्वा बहवस्तद्गतिं प्राप्ताः। ते के गोप्यः कामात्। कंसो भयात। द्वेषाच्चैद्यादयो नृपाः। संबंधाद् यादवाः।स्नेहाद् यूयम्। भक्त्या वयम्॥२९॥३०॥एषु मध्ये वेनः कतमोऽपि न तस्मात्केनाप्युपायेन मनःकृष्णे निवेशयेत्॥३१॥शिशुपालदंतवक्रौ तु विष्णुपार्षदौ विप्रशापेन वैकुंठात पतितौ॥३२॥

१ संबोध्य । २ न्यक्कारस्तिरस्कारः । ३ अद्वितीयत्वात् । ४ पूर्वश्लोकोक्तकामदिपंचमार्गगामिनाम् ।

श्रीगणेशाय तमः ॥ ऊतिः पंचदशाध्यायैः सप्तमे वर्ण्यतेऽधुना ॥ ऊतिश्च वासना प्रोक्ता तत्तत्कर्मानुसारिणी ॥ १॥ तत्र तु प्रथमेऽध्याये हिरण्यकशिपोः सुते ॥ विष्णुभक्ते निरोधस्तु विप्रशापज ईर्यते॥२॥राजोवाच॥हे ब्रह्मन्! भगवान् भूतानां प्रियः समश्च सन् देवेंद्रस्यार्थे दैत्यान् कथमवधीत् ॥१॥ निर्गुणस्येश्वरस्य देवैः प्रयोजनं न दैत्यैः सह द्वेषोऽपि न ॥२२॥ एवं सति कथं दैत्यनाशः। अत एव भगवद्गुणान् प्रति महान् संशयो जातः। तं च छेत्तुमर्हसि॥३॥हे श्रीशुक उवाच॥ हे राजन्! त्वया हरेश्चरितं साधु पृष्टम् ॥ ४ ॥ यत्र पुण्यं प्रह्लादस्य माहात्म्यं नारदादिभिः

श्रीगणेशाय नमः ॥ राजोवाच ॥ समः प्रियः सुहृद्ब्रह्मन् भूतानां भगवान् स्वयम् ॥ इन्द्रस्यार्थे कथं दैत्यानवधीद्विषमो यथा ॥१॥ न ह्यस्यार्थः सुरगणैः साक्षान्निःश्रेयसात्मनः ॥ नैवासुरेभ्यो विद्वेषो नोद्वेगश्चागुणस्य हि ॥ २ ॥ इति नः सुमहाभाग नारायणगुणान् प्रति ॥ संशयः सुमहान् जातस्तद्भवाञ्छेत्तुमर्हति ॥ ३ ॥ श्रीशुक उवाच ॥ साधु पृष्टं महाराज हरेश्चरितमद्भुतम् ॥ यत्र भागवतमाहात्म्यं भगवद्भक्तिवर्धनम् ॥ ४ ॥ गीयते परमं पुण्यमृषिभिर्नारदादिभिः ॥ नत्वा कृष्णाय मुनये कथयिष्ये हरेः कथाम् ॥ ५ ॥ निर्गुणोऽपि ह्यजोऽव्यक्तो भगवान् प्रकृतेः परः ॥ स्वमायागुणमाविश्य बाध्यबाधकतां गतः ॥ ६ ॥ सत्त्वं रजस्तम इति प्रकृतेर्नात्मनो गुणाः ॥ न तेषां युगपद्राजन् ह्रास उल्लास एव वा ॥ ७ ॥ जयकाले तु सत्त्वस्य देवर्षीन् रजसोऽसुरान् ॥ तमसो यक्षरक्षांसि तत्कालानुगुणोऽभजत ॥ ८ ॥ ज्योतिरादिरिवाभाति संघातान्न विविच्यते ॥ विदंत्यात्मानमात्मस्थं मथित्वा कवयोऽन्ततः ॥ ९ ॥

प्रगीयते अतः कृष्णं मुनिं नत्वा हरेः कथां कथयिष्ये॥ ५ ॥ भगवान् निर्गुणोऽपि स्वमायागुणमाविश्य बाध्यबाधकतां प्राप्तः ॥ ६ ॥ हे नृप! सत्त्वं रजस्तम इति प्रकृतेर्गुणाः । तेषांयुगपद् ह्रासो वृद्धिश्च न ॥७॥ सत्त्वोत्कर्षकाले देवादीनां वृद्धिः। रजसः उत्कर्षे दैत्यानाम्। तमसः उत्कर्षे यक्षरक्षसाम्। भगवान् तत्तत्कालानुकूलो भवति ॥ ८ ॥ यथा काष्ठादिषु ज्योतिः पात्रेषु जलं तथा भगवान् नानारूपो भाति ॥ ९ ॥

१ सुरादिदेहात्। २ पृथक् क्रियते।

युधिष्ठिर उवाच ॥ हे मुने ! हरिदासयोः कीदृशः कस्य शापो जातः ॥३३॥ एतन्मे कथयितुं त्वमर्हसि ॥ ३४ ॥ नारद उवाच ॥ एकदा सनकादयो यदृच्छया वैकुंठं जग्मुः ॥ ३५ ॥ तदा द्वाःस्थौ षट्पंचहायनान् नग्नान् शिशून् मत्वा प्रत्यषेधताम् ॥ ३६ ॥ तदा ते क्रुद्धाःसंत ऊचुः । हे द्वाःस्थौ ! युवामत्र वासं कर्तुं नार्हथः । अतः आसुरीं योनिं यातम् इति शापं ददुः ॥ ३७ ॥ एवं शप्तौ तत्स्थानात् पतंतौ कृपालुभिस्तैः

युधिष्ठिर उवाच ॥ कीदृशः कस्य वा शापो हरिदासाभिमर्शनः॥ अश्रद्धेय इवाभाति हरेरेकांतिनां भवः ॥३३॥ देहेंद्रियाऽसुहीनानां वैकुण्ठपुरवासिनाम् ॥ देहसंबंधसंबद्धमेतदाख्यातुमर्हसि ॥३४॥ नारद उवाच ॥ एकदा ब्रह्मणः पुत्रा विष्णोर्लोकं यदृच्छया ॥ सनंदनादयो जग्मुश्चरंतो भुवनत्रयम् ॥ ३५ ॥ पञ्चषड्ढायनार्भाभाः पूर्वेषामपि पूर्वजाः ॥ दिग्वाससः शिशून्मत्त्वा द्वाःस्थौ तान् प्रत्यषेधताम् ॥ ३६ ॥ अशपन् कुपिता एवं युवां वासं न चार्हथः ॥ रजस्तमोभ्यां रहिते पादमूले मधुद्विषः ॥ पापिष्ठामासुरीं योनिं बालिशौ यातमाश्वतः ॥ ३७ ॥ एवं शप्तौ स्वभवनात् पतंतौ तैः कृपालुभिः ॥ प्रोक्तौ पुनर्जन्मभिर्वां त्रिभिर्लोकाय कल्पताम् ॥ ३८ ॥ जज्ञाते तौ दितेः पुत्रौ दैत्यदानववंदितौ ॥ हिरण्यकशिपुर्ज्येष्ठो हिरण्याक्षोऽनुजस्ततः ॥ ३९ ॥ हतो हिरण्यकशिपुर्हरिणा सिंहरूपिणा ॥ हिरण्याक्षो धरोद्धारे बिभ्रता सौकरं वपुः ॥ ४० ॥ हिरण्यकशिपुः पुत्रं प्रह्लादं केशवप्रियम् ॥ जिघांसुरकरोन्नानायातना मृत्युहेतवे ॥ ४१ ॥ सर्वभूतात्मभूतं तं प्रशांतं समदर्शनम् ॥ भगवत्तेजसा स्पृष्टं नाशक्नोद्धंतुमुद्यमैः ॥ ४२ ॥ ततस्तौ राक्षसौ जातौ केशिन्यां विश्रवस्सुतौ ॥ रावणः कुंभकर्णश्च सर्वलोकोपतापनौ ॥ ४३ ॥ तत्रापि राघवो भूत्वा न्यहनच्छापमुक्तये ॥ रामवीर्यं श्रोष्यसि त्वं मार्कंडेयमुखात् प्रभो ॥ ४४ ॥

पुनः प्रोक्तौ युवां त्रिभिजन्मभिः स्वपदं प्राप्नुतम् ॥ ३८ ॥ तौ पूर्वं दितेः पुत्रौ हिरण्याक्षहिरण्यकशिपू जातौ ॥ ३९ ॥ नृसिंहरूपेण ज्येष्ठो हतः वराहरूपेण हिरण्याक्षो हतः ॥४० ॥ हिरण्यकशिपुर्भगवत्प्रियं प्रह्लादं जिघांसुर्मृत्युहेतवे नाना यातनाः कृतवान् ॥ ४१ ॥ शस्त्रास्त्रप्रहारैर्हंतुं नाशक्नोत ॥ ४२ ॥ ततस्तौ विश्रवसः केशिन्यां रावणकुंभकर्णौ जातौ ॥ ४३ ॥ तौ रामो जघान । हे धर्म ! तस्य वीर्यं मार्कंडेयमुखात् श्रोष्यसि ॥ ४४ ॥

१ जन्म । २ अर्भाभाः अर्भकसदृशाः ।

तावेव शिशुपालदंतवक्रौ जातौ । अधुना कृष्णचक्रेण हतौ ॥४५॥ तौ शापमुक्तौ भूत्वा पुनः पार्षदौ जातौ ॥ ४६॥ युधिष्ठिर उवाच ॥ हे भगवन् । विष्णुभक्ते पुत्रे द्वेषः कथमासीत् । प्रह्लादस्य हरिभक्तिः कथमासीत् । तच्चरित्रं ब्रूहि ॥ ४७ ॥ इति श्रीभागवते म०चू०सप्तम० प्रथमोऽध्यायः ॥ १ ॥ द्वितीये विष्णुरोषेण लोकं विप्लाव्य दानवैः ॥ तद्धतभ्रातृपुत्रादीनितिहासैरसांत्वयत् ॥ १॥ नारद उवाच ॥ हे राजन् ! वराहरूपेण

तावेव क्षत्रियौ जातौ मातृष्वस्रात्मजौ तव ॥ अधुना शापनिर्मुक्तौ कृष्णचक्रहतांहसौ॥४५॥ वैरानुबंधतीव्रेण ध्यानेनाऽच्युतसात्मताम् ॥ नीतौ पुनर्हरेः पार्श्वं जग्मतुर्विष्णुपार्षदौ ॥ ४६ ॥ युधिष्ठिर उवाच ॥ विद्वेषो दयिते पुत्रे कथमासीन्महात्मनि ॥ ब्रूहि मे भगवन् येन प्रह्लादस्याऽच्युतात्मता ॥४७॥ इति श्रीभागवते म०सप्तमस्कन्धे जयविजययोश्शापवर्णनं नाम प्रथमोऽध्यायः ॥ १॥ नारद उवाच ॥ भ्रातर्येवं विनिहते हरिणा क्रोडमूर्तिना ॥ हिरण्यकशिपू राजन् पर्यतप्यद्रुषा शुचा ॥१॥आह चेदं रुषाघूर्णः संदष्टदशनच्छदः ॥ कोपोज्ज्वलद्भ्यां चक्षुर्भ्यां निरीक्षन् धूम्रमंबरम् ॥२॥ करालदंष्ट्रोग्रदृष्ट्या दुष्प्रेक्ष्यभ्रुकुटीमुखः ॥ शूलमुद्यम्य सदसि दानवानिदमब्रवीत् ॥ ३ ॥ भोभो दानवदैतेया द्विमूर्धन् त्र्यक्ष शंबर ॥ शतबाहो हयग्रीव नमुचे पाक इल्वल ॥४ ॥ विप्रचित्ते मम वचः पुलोमन्शकुनादयः ॥ शृणुतानंतरं सर्वे क्रियतामाशु मा चिरम्॥५॥ सपत्नैर्घातितः क्षुद्रैर्भ्राता मे दयितः सुहृत् ॥ पार्ष्णिग्राहेण हरिणा समेनाप्युपधावनैः ॥६॥ तस्य त्यक्तस्वभावस्य घृणेर्मायावनौकसः ॥ भजंतं भजमानस्य बालस्येवाऽस्थिरात्मनः ॥ ७ ॥ मच्छूलभिन्नग्रीवस्य भूरिणा रुधिरेण वै ॥ रुधिरप्रियं तर्पयिष्ये भ्रातरं मे गतव्यथः ॥ ८ ॥

हरिणा हिरण्याक्षे हते सति क्रुद्धः ॥ १ ॥ संदष्टदशनच्छदः ॥ २ ॥ करालदंष्ट्रो हिरण्यकशिपुः सदसि शूलं धृत्वा दानवान् जगाद ॥ ३ ॥ भो दानवदैतेयाः ! हे हयग्रीव ! हे नमुचे ! ॥ ४ ॥ हे विप्रचित्त ! मद्वचः शृणुत । तथैव शीघ्रं क्रियताम् ॥ ५ ॥ मत्सपत्नैर्देवैर्हरिणा मे भ्राता नाशितः ॥६ ॥ अतो मायावराहस्य भजतामनुकूलस्य हरेः ॥ ७ ॥ मच्छूलभिन्नग्रीवस्य तस्य रुधिरेण मे भ्रातरं तर्पयिष्ये ॥ ८ ॥

---

१ भजनैर्निमित्तभूतैः । २ शुद्धतेजोमयस्य ।

हरौ नष्टे सर्वे देवाः शुष्यंति मूलच्छेदनेन शाखा इव॥९॥ यावत् तर्पयिष्ये तावद् यूयं भुवं यात । तत्र तपोव्रतयज्ञादि युक्तान् द्विजान् घातयत ॥१० ॥ एवं कृते द्विजक्रियामूलो विष्णुर्नश्येत ॥ ११॥ तस्माद् यत्र द्विजाः गावो वर्णाश्रमाः क्रियाः तंतं देशं यात ॥ १२ ॥ इति भर्तृगदितं श्रुत्वा ते दैत्यास्तथा प्रजानाशं चक्रुः ॥ १३ ॥ पुरग्रामव्रजादीन् देहुः ॥१४॥ केचित् कुद्दालादिभिः सेतुप्राकारादीन् बिभिदुः । केचित् परशुना

तस्मिन् कूटेऽहिते नष्टे कृत्तमूले वनस्पतौ ॥ विटपा इव शुष्यंति विष्णुप्राणा दिवौकसः॥९॥तावद्यात भुवं यूयं विप्रक्षत्रसमेधितान् ॥ सूदयध्वं तपोयज्ञस्वाध्यायव्रतदानिनः ॥१०॥विष्णुर्द्विजक्रियामूलो यज्ञो धर्ममयः पुमान् ॥ देवर्षिपितृभूतानां धर्मस्य च परायणम् ॥११॥यत्रयत्र द्विजा गावो वेदा वर्णाश्रमाः क्रियाः ॥ तंतं जनपदं यात संदीपयत वृश्चत ॥ १२ ॥ इति ते भर्तृनिर्देशमादाय शिरसाऽऽदृताः ॥ तथा प्रजानां कदनं विदधुः कदनप्रियाः ॥१३॥पुरग्रामव्रजोद्यानक्षेत्रारामाश्रमाकरान् ॥ खेंटखर्वटघोषांश्च ददहुः पत्तनानि च॥१४॥केचित् खनित्रैर्बिभिदुः सेतुप्राकारगोपुरान् ॥ आजीव्यांश्चिच्छिदुर्वृक्षान् केचित् परशुपाणयः॥प्रादहञ्छरणान्यन्ये प्रजानां ज्वलितोल्मुकैः॥१५॥एवं विप्रकृते लोके दैत्येंद्रानुचरैर्मुहुः॥दिवं देवाः परित्यज्य भुवि चेरुरलक्षिताः॥१६॥हिरण्यकशिपुर्भ्रातुः संपरेतस्य दुःखितः॥कृत्वा कटोदकादीनि भ्रातृपुत्रानसांत्वयत्॥१७॥शकुनिं शंबरं धृष्टं भूतसंतापनं वृकम् ॥ कालनाभं महानाभं हरिश्मश्रुमथोत्कचम्॥१८॥तन्मातरं रुषाभानुं दितिं च जननीं गिरा ॥ श्लक्ष्णया देशकालज्ञ इदमाह जनेश्वरः॥१९॥हिरण्यकशिपुरुवाच ॥ अंबांऽब हे वधूः पुत्रा वीरं माऽर्हथ शोचितुम् ॥ रिपोरभिमुखे श्लाघ्यः शूराणां वध ईप्सितः ॥ २० ॥

वृक्षान् चिच्छिदुः ॥ १५ ॥ एवं दैत्यैरुपद्रुते लोके सति देवाः दिवं त्यक्त्वा गुप्ताः संतो भुवि चेरुः ॥ १६॥ ततो हिरण्यकशिपुर्मृतभ्रातुरौर्ध्वदहिकीं क्रियां कृत्वा ॥ १७ ॥ शकुनिशंबरवृकसालनाभादीन् तत्पुत्रान् ॥ १८ ॥ तत्पत्नीं रुषाभानुं दितिं च सांत्वयन् जगाद ॥ १९ ॥ हिरण्यकशिपुरुवाच ॥ हे अंब ! हे वधूः । हे पुत्राः ! वीरं मा शोचत । शूराणां रणे वधः श्रेष्ठः ॥ २० ॥



१ कपटे । २ कृषीवलानां वासस्थानम् । ३ गिरिद्रोण्याश्रयो ग्रामः । ४ आभीराणां वासस्थानम् । ५ आजीव्याः आम्रादयः ।

इह भूतानां संगमः प्रपायामिवास्ति ॥ २१ ॥ आत्माऽव्ययो नित्यः । देहसंबंधस्तु मायाकृतः ॥ २२ ॥ यथा भ्राम्यमाणेन चक्षुषा भूश्चलतीव दृश्यते ॥ २३ ॥ तथा गुणैर्मनसि भ्राम्यमाणे पुरुषस्तत्साम्यतां याति ॥ २४ ॥ जीवस्य देहाभिमानेनात्मनो विपर्ययो भवति ॥ २५ ॥ जीवः कर्मणा संसृतिं प्राप्नोति । तस्मात् कर्मणा कृतं सर्वं मिथ्या इति ज्ञात्वा शोकं मा कुरुत ॥ २६ ॥ अत्र यमस्य प्रेतबंधूनां संवादरू

भूतानामिह संवासः प्रपायामिव सुव्रते ॥ दैवेनैकत्र नीतानामुन्नीतानां[1] स्वकर्मभिः ॥२१॥ नित्य आत्माऽव्ययःशुद्धः सर्वगः सर्ववित् परः ॥ धत्तेऽसावात्मनो लिंगं मायया विसृजन् गुणान् ॥२२॥ यथांभसा प्रचलता तरवोपि चला इव ॥ चक्षुषा भ्राम्यमाणेन दृश्यते चलतीव भूः ॥२३॥ एवं गुणैर्भ्राम्यमाणे मनस्यविकलःपुमान् ॥ याति तत्साम्यतां भद्रे ह्यलिंगो लिंगवानिव ॥२४॥ एष आत्म[2]विपर्यासो ह्यलिंगे लिंगभावना ॥ एष प्रियाप्रियैर्योगो वियोगःकर्मसंसृतिः ॥२५॥ संभवश्च विनाशश्च शोकश्च विविधः स्मृतः ॥ अविवेकश्चचिंता च विवेकस्मृतिरेवच ॥२६॥ अत्राप्युदाहरंतीममितिहासं पुरातनम् ॥ यमस्य प्रेतबंधूनां संवादं तं निबोधत ॥२७॥ उशीनरेष्वभूद्राजा सुयज्ञइति विश्रुतः ॥ सपत्नैर्निहतो युद्धे ज्ञातयस्तमुपासत ॥२८॥ विशीर्णरत्नकवचं विभ्रष्टाभरणस्रजम् ॥ शरनिर्भिन्नहृदयं शयानमसृगाविलम् ॥२९॥ प्रकीर्णकेशं ध्वस्ताक्षं रभसा दष्टदच्छदम् ॥ रजःकुंठमुखांभोजं छिन्नायुधभुजं मृधे ॥३०॥ उशीनरेंद्रं विधिना तथाकृतंपतिंमहिष्यः प्रसमीक्ष्य दुःखिताः ॥ हताः स्म नाथेति करैरुरो भृशं घ्नंत्यो मुहुस्तत्पदयोरुपापतन् ॥३१॥ रुदत्य उच्चैर्दयितांघ्रिपंकजं सिंचंत्य अस्रैःकुचकुंकुमारुणैः ॥ विस्रस्तकेशाभरणाः शुचं नृणां सृजंत्य आक्रंदनया विलेपिरे ॥ ३२ ॥

पमितिहासं शृणुत ॥ २७ ॥ उशीनरदेशेषु सुयज्ञो राजा बभूव । स शत्रुभिर्युद्धे हतः । ज्ञातयस्तमावृत्य स्थिताः ॥ २८ ॥ तदा शरनिर्भिन्नहृदयं विशीर्णकवचं शयानम् ॥ २९ ॥ छिन्नायुधभुजं रजसा व्याप्तमुखम् ॥ ३० ॥ एवं पतिं दृष्ट्वा तस्य महिष्यो दुःखिताः हस्तैरुरो घ्नंत्यो हा नाथनाथेति वदंत्यस्तत्पादयोः पेतुः ॥ ३१ ॥ विस्रस्तकेशाभरणाः अश्रुणा दयितांघ्रिपंकजं सिंचंत्यः उच्चै रुदंत्यो विलेपिरे ॥ ३२ ॥

---

१ वियोजितानाम् । २ देहाभिमानः ।

अहो निर्दयेन ब्रह्मणा त्वमीदृशीं दशां गमितः ॥ ३३ ॥ हे महीपते ! त्वां विना वयं कथं जीवेम । हे वीर ! यत्र त्वं यास्यसि तत्रानुगमनेऽस्माकमाज्ञां देहि ॥ ३४ ॥ एवं मृतं पतिं प्रगृह्य विलपंतीनां तस्य दाहार्थं नयनमनिच्छंतीनां तासां सूर्योऽस्तं गतः ॥ ३५ ॥ तदा यमस्तासां विलापं श्रुत्वा बालकरूपेण तत्रागत्य तान् बोधयामास ॥ ३६ ॥ यम उवाच ॥ अहो वयसाधिकानां मोहं पश्यत । स्वयं मृत्युधर्मा अपि यस्मादागमनं तत्र गतं वृथा शोचंति ॥ ३७ ॥ अहो वयं युष्मत्तो धन्याः । बाल्ये पितृभ्यां त्यक्ता अपि न चिंतयामः। कुतः । यो गर्भे रक्षति

अहो विधात्राऽकरुणेन नः प्रभो भवान् प्रणीतो दृगगोचरां दशाम् ॥ उशीनराणामसि वृत्तिदः पुरा कृतोऽधुना येन शुचां विवर्धनः ॥ ३३ ॥ त्वया कृतज्ञेन वयं महीपते कथं विना स्याम सुहृत्तमेन ते ॥ तत्रानुयानं तव वीरपादयोः शुश्रूषतीनां दिश यत्र यास्यसि ॥ ३४ ॥ एवं विलपतीनां वै परिगृह्य मृतं पतिम् ॥ अनिच्छतीनां निर्हारमर्कोऽस्तं संन्यवर्तत ॥ ३५ ॥ तत्र ह प्रेतबंधूनामाश्रुत्य परिदेवितम् ॥ आह तान् बालको भूत्वा यमः स्वयमुपागतः ॥ ३७ ॥ यम उवाच ॥ अहो अमीषां वयसाधिकानां विपश्यतां लोकविधिं विमोहः ॥ यत्रागतस्तत्र गतं मनुष्यं स्वयं सधर्मा अपि शोचंत्यपार्थम् ॥ ३७ ॥ अहो वयं धन्यतमा यदत्र त्यक्ताः पितृभ्यां न विचिंतयामः ॥ अभक्ष्यमाणा अबला वृकादिभिः स रक्षिता रक्षति यो हि गर्भे ॥ ३८ ॥ य इच्छयेशः सृजतीदमव्ययो य एव रक्षत्यवलुंपते च यः॥तस्या बलाः क्रीडनमाहुरीशितुश्चराचरं निग्रहसंग्रहे प्रभुः ॥ ३९ ॥ पथि च्युतं तिष्ठति दिष्टरक्षितं गृहे स्थितं तद्विहतं विनश्यति ॥ जीवत्यनाथोऽपि तदीक्षितो वने गृहे पि गुप्तोऽस्य हतो न जीवति ॥ ४० ॥ भूतानि तैस्तैर्निजयोनिकर्मभिर्भवंति काले न भवंति सर्वशः ॥ न तत्र हात्मा प्रकृतावपि स्थितस्तस्या गुणैरन्यतमो निबध्यते ॥ ४१ ॥

स एव सर्वत्र रक्षिता ॥ ३८ ॥ हे अबलाः ! योऽव्ययः इच्छया सृजति रक्षति संहरति तस्येयं क्रीडा ॥ ३९ ॥ यथा पथि च्युतं दैवरक्षितं तिष्ठति गृहे स्थितं दैवविहतं नश्यति ॥ एवमीश्वरेण रक्षितोऽनाथोऽपि वने जीवति । तेनारक्षितो गृहे गुप्तोऽपि न जीवति ॥ ४० ॥ कालेन भूतानि कर्मभिर्भवंति नश्यंति च ॥ आत्मा देहस्थितोऽपि प्रकृतेर्गुणैर्न बध्यते ॥ ४१ ॥

इदं शरीरं पुरुषस्य मोहादुत्पन्नं यथा जले जातो बुद्बुदः ॥ ४२ ॥ यथा नभः सर्वगतं न सज्जते तथाऽऽत्मा गुणाश्रयोऽपि न सज्जते ॥ ४३॥ हे मूढाः! यमनुशोचथ सोऽयं सुयज्ञः शेते किम् । अयं श्रोता वक्ता च न यः श्रोता वक्ता च स कर्हिचिन्न दृश्यते॥४४॥स एवात्मा देहाद्भिन्नः। स तु प्राणदेहयोरन्यः ॥ ४५ ॥ विभुर्भूतेंद्रियमनोयुक्तानुच्चनीचदेहान् सृजति नाशयति ॥४६॥यावत् लिंगशरीरान्वितस्तावत् कर्मबंधनं भवति

इदं शरीरं पुरुषस्य मोहजं यथा पृथग्भौतिकमीयते गृहम्॥यथोदकैःपार्थिवतैजसैर्जनः कालेन जातो विकृतो विनश्यति ॥४२॥ यथाऽनलो दारुषु भिन्न ईयते यथानिलो देहगतः पृथक् स्थितः ॥ यथा नभः सर्वगतं न सज्जते तथा पुमान् सर्वगुणाश्रयः परः ॥४३॥सुयज्ञो नन्वयं शेते मूढा यमनुशोचथ ॥ यः श्रोता योऽनुवक्तेह स न दृश्येत कर्हिचित् ॥४४॥यः श्रोता नानुवक्ताऽयं मुख्योऽप्यत्र महानसुः ॥ यस्त्विहेंद्रियवानात्मा स चान्यः प्राणदेहयोः ॥४५॥भूतेंद्रियमनोलिंगान् देहानुच्चावचान् विभुः ॥ भजत्युत्सृजति ह्यन्यस्तच्चापि स्वेन तेजसा ॥४६॥यावल्लिंगान्वितो ह्यात्मा तावत्कर्मनिबंधनम् ॥ ततो विपर्ययः क्लेशो मायायोगोऽनुवर्तते॥४७॥ वितथोभिनिवेशोऽयं यद्गुणेष्वर्थदृग्वचः ॥ यथा मनोरथः स्वाप्नः सर्वमैंद्रियकं मृषा ॥४८॥ अथ नित्यमनित्यं वा नेह शोचंति तद्विदः ॥ नान्यथा शक्यते कर्तुं स्वभावः शोचतामिति ॥४९॥ लुब्धको विपिने कश्चित् पक्षिणां निर्मितोंतकः ॥ वितत्य जालं विदधे तत्रतत्र प्रलोभयन् ॥ ५० ॥ कुलिंगमिथुनं तत्र विचरत् समदृश्यत ॥ तयोः कुलिंगी सहसा लुब्धकेन प्रलोभिता ॥ ५१ ॥

ततः क्लेशोऽनुवर्तते ॥ ४७ ॥स्वप्नमनोरथ इव सुखदुःखादिषु परमार्थाभिनिवेशो मिथ्या ॥४८॥तस्मात् ज्ञानिनो नित्यमात्मानमनित्यदेहं वा न शोचंति । अतः शोकं मा कुरुत ॥ ४९॥अत्रेतिहासं शृणुत । पुरा वने कश्चित् लुब्धकः कणादिभिः प्रलोभयन् जालं विस्तार्य पक्षिणो धृतवान् ॥ ५० ॥ एवंकृते सति तत्र विचरत् कुलिंगमिथुनं दृष्ट्वा तयोर्मध्ये कुलिंगीं प्रलोभ्य जालसूत्रेण दधार ॥ ५१ ॥

तां बद्धां दृष्ट्वा कुलिंगो मोचितुमसमर्थो वृक्षमाश्रित्य स्नेहाद्विलापं चकार ॥५२॥ अहो देवोऽकरुणः । दीनया स्त्रिया किं करिष्यति ॥५३॥ स्त्रीविहीनजीवितेन मे किं प्रयोजनम् । अतो मामपि नय ॥ ५४॥ पक्षहीनान् मातृहीनान् बालान् कथं बिभर्मि ॥ ५५ ॥ एवं विलपंतं कुलिंगं लुब्धको गुप्तः सन् शरेण विव्याध ॥५६॥ एवं यूयं स्वमृत्युमपश्यंत्यः शोचंत्यो वर्षशतैरपि पतिं न प्राप्स्यथ ॥ ५७ ॥ हिरण्यकशिपुरुवाच

साऽसज्जत शिचस्तंत्यां महिषी कालयंत्रिता ॥ कुलिंगस्तां तथापन्नां निरीक्ष्य भृशदुःखितः ॥ स्नेहादकल्पः कृपणः कृपणां पर्यदेवयत् ॥ ५२ ॥ अहो अकरुणो देवः स्त्रिया करुणया विभुः ॥ कृपणं माऽनुशोचंत्या दीनया किं करिष्यति ॥ ५३ ॥ कामं नयतु मां देवः किमधनात्मनो हि मे ॥ दीनेन जीवता दुःखमनेन विधुरायुषा ॥ ५४ ॥ कथं त्वजातपक्षांस्तान् मातृहीनान् बिभर्म्यहम् ॥ मंदभाग्याःप्रतीक्षंते नीडे मे मातरं प्रजाः ॥ ५५ ॥ एवं कुलिंगं विलपंतमारात् प्रियावियोगातुरमश्रुकंठम् ॥ स एव तं शाकुनिकः शरेण विव्याध कालप्रहितो विलीनः ॥ ५६ ॥ एवं यूयमपश्यंत्य आत्माऽपायमबुद्धयः ॥ नैनं प्राप्स्यथ शोचंत्यः पतिं वर्षशतैरपि ॥५७॥ हिरण्यकशिपुरुवाच ॥ बाल एवं प्रवदति सर्वे विस्मितचेतसः ॥ ज्ञातयो मेनिरे सर्वमनित्यमयथोत्थितम् ॥ ५८ ॥ यम एतदुपाख्याय तत्रैवांतरधीयत ॥ ज्ञातयोपि सुयज्ञस्य चक्रुर्यत्सांपरायिकम् ॥ ५९ ॥ ततः शोचत मा यूयं परं चात्मानमेव च ॥ क आत्मा कः परो वाऽत्र स्वीयः पारक्य एव वा ॥ ६० ॥ स्वपराभिनिवेशेन विना ज्ञानेन देहिनाम् ॥ नारद उवाच ॥ इति दैत्यपतेर्वाक्यं दितिराकर्ण्य सस्नुषा ॥ पुत्रशोकं क्षणात् त्यक्त्वा तत्त्वे चित्तमधारयत् ॥ ६१ ॥ इति श्रीभागवते महापुराणे सप्तमस्कंधे दितिशोकापनयनं नाम द्वितीयोऽध्यायः ॥ २ ॥

एवं बाले वदति सति रुषादयः सर्वं मृषा मेनिरे॥५८॥इत्युक्त्वा यमोंतरधीयत । ततः सुयज्ञस्य ज्ञातयः ऊर्ध्वदेहक्रियां चक्रुः ॥ ५९॥ तस्माद्यूयं शोकं मा कुरुत ॥ ६० ॥ नारद उवाच । हे राजन् ! सस्नुषा दितिर्दैत्यपतेर्वाक्यं श्रुत्वा पुत्रशोकं त्यक्त्वा तत्त्वे चित्तं दधार ॥६१॥ इतिश्रीभागवते चूर्णिकायां सप्तमस्कन्धे द्वितीयोऽध्यायः ॥ २ ॥

ये तस्य तपसा तप्तं वीक्ष्य जगद्विधिः ॥ आगत्य विस्मितस्तेन संस्तुतश्च वरानदात् ॥ १ ॥ नारद उवाच ॥ हे युधिष्ठिर ! हिरण्यकशिपुरा
मजयमजराऽमरं शत्रुहीनं कर्तुमिच्छन् ॥ १ ॥ ऊर्ध्वबाहुर्नभोदृष्टिः पादांगुष्ठेनाऽवनिं श्रितः सन् मंदरद्रोण्यां दारुणं तपस्तेपे ॥ २ ॥
देवाः स्वस्थानानि भेजिरे ॥ ३ ॥ बहुकालकृततपसा तस्य मूर्ध्नः सधूमोऽग्निः समुत्थितः । तेन त्रैलोक्यं तप्तम् ॥ ४ ॥ समुद्राश्चुक्षुभुः ।
भिः सह भूश्चचाल । दिशो जज्वलुः । ग्रहताराः निपेतुः ॥ ५ ॥ तेनाग्निना तप्ताः देवाः दिवं त्यक्त्वा ब्रह्मलोकं गत्वा धात्रे विज्ञापया

द उवाच ॥ हिरण्यकशिपू राजन्नजेयमजरामरम् ॥ आत्मानमप्रतिद्वंद्वमेकराजं व्यधित्सत ॥ १ ॥ स तेपे मंद
यां तपः परमदारुणम् ॥ ऊर्ध्वबाहुर्नभोदृष्टिः पादांगुष्ठाश्रितावनिः ॥ २ ॥ जटादीधितिभी रेजे संवर्तार्क इवांशु
तस्मिंस्तपस्तप्यमाने देवाः स्थानानि भेजिरे ॥ ३ ॥ तस्य मूर्ध्नः समुद्भूतः सधूमोऽग्निस्तपोमयः ॥ तिर्यगूर्ध्व
ोकानतपद्विष्वगीरितः ॥४॥ चुक्षुभुर्नद्युदन्वंतः सद्वीपाद्रिश्चचाल भूः ॥ निपेतुः सग्रहास्तारा जज्वलुश्च दिशो
॥ तेन तप्ता दिवं त्यक्त्वा ब्रह्मलोकं ययुः सुराः ॥ धात्रे विज्ञापयामासुर्देवदेव जगत्पते ॥ ६ ॥ दैत्येन्द्रतपसा
मे वि स्थातुं न शक्नुमः ॥ तस्य चोपशमं भूमन् विधेहि यदि मन्यसे ॥ लोका न यावन्नंक्ष्यंति बलिहारास्त
अ ॥ ७ ॥ तस्यायं किल संकल्पश्चरतो दुश्चरं तपः ॥ श्रूयतां किं न विदितस्तवाऽथापि निवेदितः ॥८॥ सृष्ट्वा
कूट दं तपोयोगसमाधिना ॥ अध्यास्ते सर्वधिष्ण्येभ्यः परमेष्ठी निजासनम् ॥ ९ ॥ तदहं वर्धमानेन तपोयोग
ह्या ॥ कालात्मनोश्च नित्यत्वात्साधयिष्ये तथात्मनः ॥ १० ॥ अन्यथेदं विधास्येऽहमयथापूर्वमोजसा ॥
नेंद्रिय ालनिर्धूतैः कल्पांते वैष्णवादिभिः ॥ ११ ॥

जगतो ेवदेव ! दैत्येंद्रतपसा तप्ताः वयं दिवि स्थातुं न समर्थाः । हे भूमन् ! लोकाः यावन्न नंक्ष्यंति तावत् तस्योपशमं कुरु ॥ ७ ॥ हे
कार्यकारण दितं तथापि निवेदयामः । एवं तस्य संकल्पोऽस्ति ॥ ८ ॥ यथा ब्रह्मा तपोयोगसमाधिना विश्वं सृष्ट्वा सत्यलोकमधितिष्ठति
सन् स्थूलश तपोयोगादिना साधयिष्ये ॥ १० ॥ इदं विश्वं सुराऽसुरादिव्यत्ययेन विधास्यामि ॥ ११ ॥

१ चत्वारो है

तां बद्धां दृष्ट्वा कुलिंगो मोचितुमसमर्थो वृक्षमाश्रित्य स्नेहाद्विलापं चकार ॥५२॥ अहो देवोऽकरुणः । दीनया स्त्रिया किं करिष्यति ॥५३॥ स्त्रीविहीनजीवितेन मे किं प्रयोजनम् । अतो मामपि नय ॥ ५४॥ पक्षहीनान् मातृहीनान् बालान् कथं बिभर्मि ॥ ५५ ॥ एवं विलपंतं कुलिंगं लुब्धको गुप्तः सन् शरेण विव्याध ॥५६॥ एवं यूयं स्वमृत्युमपश्यंत्यः शोचंत्यो वर्षशतैरपि पतिं न प्राप्स्यथ ॥ ५७ ॥ हिरण्यकशिपुरुवाच

साऽसज्जत शिचस्तंत्यां महिषी कालयंत्रिता ॥ कुलिंगस्तां तथापन्नां निरीक्ष्य भृशदुःखितः ॥ स्नेहादकल्पः कृपणः कृपणां पर्यदेवयत् ॥ ५२ ॥ अहो अकरुणो देवः स्त्रिया करुणया विभुः ॥ कृपणं माऽनुशोचंत्या दीनया किं करिष्यति ॥ ५३ ॥ कामं नयतु मां देवः किमधनात्मनो हि मे ॥ दीनेन जीवता दुःखमनेन विधुरायुषा ॥ ५४ ॥ कथं त्वजातपक्षांस्तान् मातृहीनान् बिभर्म्यहम् ॥ मंदभाग्याःप्रतीक्षंते नीडे मे मातरं प्रजाः ॥ ५५ ॥ एवं कुलिंगं विलपंतमारात् प्रियावियोगातुरमश्रुकंठम् ॥ स एव तं शाकुनिकः शरेण विव्याध कालप्रहितो विलीनः ॥ ५६ ॥ एवं यूयमपश्यंत्य आत्माऽपायमबुद्धयः ॥ नैनं प्राप्स्यथ शोचंत्यः पतिं वर्षशतैरपि ॥५७ ॥हिरण्यकशिपुरुवाच ॥ बाल एवं प्रवदति सर्वे विस्मितचेतसः ॥ ज्ञातयो मेनिरे सर्वमनित्यमयथोत्थितम् ॥ ५८ ॥ यम एतदुपाख्याय तत्रैवांतरधीयत ॥ ज्ञातयोपि सुयज्ञस्य चक्रुर्यत्सांपरायिकम् ॥ ५९ ॥ ततः शोचत मा यूयं परं चात्मानमेव च ॥ क आत्मा कः परो वाऽत्र स्वीयः पारक्य एव वा ॥ ६० ॥ स्वपराभिनिवेशेन विना ज्ञानेन देहिनाम् ॥ नारद उवाच ॥ इति दैत्यपतेर्वाक्यं दितिराकर्ण्य सस्नुषा ॥ पुत्रशोकं क्षणात् त्यक्त्वा तत्त्वे चित्तमधारयत् ॥ ६१ ॥ इति श्रीभागवते महापुराणे सप्तमस्कंधे दितिशोकापनयनं नाम द्वितीयोऽध्यायः ॥ २ ॥

एवं बाले वदति सति रुषादयः सर्वं मृषा मेनिरे॥५८॥इत्युक्त्वा यमोंतरधीयत । ततः सुयज्ञस्य ज्ञातयः ऊर्ध्वदेहक्रियां चक्रुः ॥ ५९॥ तस्माद्यूयं शोकं मा कुरुत ॥ ६० ॥ नारद उवाच । हे राजन् ! सस्नुषा दितिर्दैत्यपतेर्वाक्यं श्रुत्वा पुत्रशोकं त्यक्त्वा तत्त्वे चित्तं दधार ॥६१॥ इतिश्रीभागवते चूर्णिकायां सप्तमस्कन्धे द्वितीयोऽध्यायः ॥ २ ॥

ये तस्य तपसा तप्तं वीक्ष्य जगद्विधिः ॥ आगत्य विस्मितस्तेन संस्तुतश्च वरानदात् ॥ १ ॥ नारद उवाच ॥ हे युधिष्ठिर ! हिरण्यकशिपुरा
मजयमजराऽमरं शत्रुहीनं कर्तुमिच्छन् ॥ १ ॥ ऊर्ध्वबाहुर्नभोदृष्टिः पादांगुष्ठेनाऽवनिं श्रितः सन् मंदरद्रोण्यां दारुणं तपस्तेपे ॥ २ ॥
देवाः स्वस्थानानि भेजिरे ॥ ३ ॥ बहुकालकृततपसा तस्य मूर्ध्नः सधूमोऽग्निः समुत्थितः । तेन त्रैलोक्यं तप्तम् ॥ ४ ॥ समुद्राश्चुक्षुभुः ।
द्रिभिः सह भूश्चचाल । दिशो जज्वलुः । ग्रहताराः निपेतुः ॥ ५ ॥ तेनाग्निना तप्ताः देवाः दिवं त्यक्त्वा ब्रह्मलोकं गत्वा धात्रे विज्ञापया

द उवाच ॥ हिरण्यकशिपू राजन्नजेयमजरामरम् ॥ आत्मानमप्रतिद्वंद्वमेकराजं व्यधित्सत ॥ १ ॥ स तेपे मंद
र्यां तपः परमदारुणम् ॥ ऊर्ध्वबाहुर्नभोदृष्टिः पादांगुष्ठाश्रितावनिः ॥ २ ॥ जटादीधितिभी रेजे संवर्तार्क इवांशु
तस्मिंस्तपस्तप्यमाने देवाः स्थानानि भेजिरे ॥ ३ ॥ तस्य मूर्ध्नः समुद्भूतः सधूमोऽग्निस्तपोमयः ॥ तिर्यगूर्ध्व
लोकानतपद्विष्वगीरितः ॥४॥ चुक्षुभुर्नद्युदन्वंतः सद्वीपाद्रिश्चचाल भूः ॥ निपेतुः सग्रहास्तारा जज्वलुश्च दिशो
॥ तेन तप्ता दिवं त्यक्त्वा ब्रह्मलोकं ययुः सुराः ॥ धात्रे विज्ञापयामासुर्देवदेव जगत्पते ॥ ६ ॥ दैत्येन्द्रतपसा
वि स्थातुं न शक्नुमः ॥ तस्य चोपशमं भूमन् विधेहि यदि मन्यसे ॥ लोका न यावन्नंक्ष्यंति बलिहारास्त
॥ ७ ॥ तस्यायं किल संकल्पश्चरतो दुश्चरं तपः ॥ श्रूयतां किं न विदितस्तवाऽथापि निवेदितः ॥८॥ सृष्ट्वा
दं तपोयोगसमाधिना ॥ अध्यास्ते सर्वधिष्ण्येभ्यः परमेष्ठी निजासनम् ॥ ९ ॥ तदहं वर्धमानेन तपोयोग
॥ कालात्मनोश्च नित्यत्वात्साधयिष्ये तथात्मनः ॥ १० ॥ अन्यथेदं विधास्येऽहमयथापूर्वमोजसा ॥
लनिर्धूतैः कल्पांते वैष्णवादिभिः ॥ ११ ॥

देवदेव ! दैत्येंद्रतपसा तप्ताः वयं दिवि स्थातुं न समर्थाः । हे भूमन् ! लोकाः यावन्न नंक्ष्यंति तावत् तस्योपशमं कुरु ॥ ७ ॥ हे
दितं तथापि निवेदयामः । एवं तस्य संकल्पोऽस्ति ॥ ८ ॥ यथा ब्रह्मा तपोयोगसमाधिना विश्वं सृष्ट्वा सत्यलोकमधितिष्ठति
तपोयोगादिना साधयिष्ये ॥ १० ॥ इदं विश्वं सुराऽसुरादिव्यत्ययेन विधास्यामि ॥ ११ ॥

स्य संकल्पं शुश्रुम । अतो यद् योग्यं तद् विचारय ॥१२॥ हे ब्रह्मन् । तवासनं तु द्विजगवां सुखाय वर्तते । अतस्तदुपशमं
देवैर्विज्ञापितो ब्रह्मा भृग्वादि[illegible]भिः सह तस्याश्रमं ययौ ॥१४॥ तत्र वल्मीकतृणकीचकैर्गुप्तं प्रथमं न ददर्श । पश्चात् पिपीलिका
त्वङ्मांसशोणितं तं दैत्यं [illegible]कथंचिदालक्ष्य ॥१५॥ विस्मितः सन् प्रहस्य जगाद ॥१६॥ ब्रह्मोवाच ॥ हे काश्यप! उत्तिष्ठोत्तिष्ठ ।

निर्बंधं तपः परममास्थितः ॥ विधत्स्वानंतरं युक्तं स्वयं त्रिभुवनेश्वर॥१२॥ तवासनं द्विजगवां पारमेष्ठ्यं
भवाय श्रेयसे भूत्यै क्षेमाय विजयाय च ॥ १३ ॥ इति विज्ञापितो देवैर्भगवानात्मभूर्नृप ॥ परीतो भृगु
यौ दैत्येश्वराश्रमम् ॥१४॥ न ददर्श प्रतिच्छन्नं वल्मीकतृणकीचकैः ॥ पिपीलिकाभिराचीर्णमेदस्त्वङ्मांस
म् ॥१५॥ तपंतं तपसा लोकान् यथाऽभ्रपिहितं रविम् ॥ विलक्ष्य विस्मितः प्राह प्रहसन् हंसवाहनः ॥१६॥
च ॥ उत्तिष्ठोत्तिष्ठ भद्रं ते तपस्सिद्धोऽसि काश्यप ॥ वरदोऽहमनुप्राप्तो व्रियतामीप्सितो वरः॥१७॥ अद्राक्षम
हृत्सारं महदद्भुतम् ॥ दंशभक्षितदेहस्य प्राणा ह्यस्थिषु शेरते॥१८॥नैतत् पूर्वर्षयश्चक्रुर्न करिष्यंति चापरे ॥
र्धारयेत् प्राणान् को वै दिव्यसमाः शतम् ॥१९॥ व्यवसायेन तेऽनेन दुष्करेण मनस्विनाम् ॥ तपोनिष्ठेन भव
जितोऽहं दितिनंदन ॥२०॥ ततस्त आशिषः सर्वा ददाम्यसुरपुंगव ॥ मर्त्यस्य ते अमर्त्यस्य दर्शनं नाफलं मम
१॥नारद उवाच ॥ इत्युक्त्वाऽऽदिभवो देवो भक्षितांगं पिपीलिकैः ॥ कमंडलुजलेनौक्षद्दिव्येनाऽमोघराधसा॥२२॥

पसा सिद्धोऽसि । अत ईप्सितो वरो व्रियताम् ॥१७॥ मक्षिकादिभिर्भक्षितदेहस्य ते प्राणाः अस्थिषु शेरते । एवं ते धैर्यं मया दृष्टम् ॥ १८॥
ऋषयः पूर्वं न चक्रुः । अपरे न करिष्यंति । दिव्यशतवर्षं जलं विना प्राणान् को धारयेत्॥१९॥हे दितिनंदन ! तपोनिष्ठेन त्वया जितोहम्
०॥ मद्दर्शनं ते निष्फलं न । अतो वरं वृणीष्व ॥२१॥ नारद उवाच ॥ एवमुक्त्वा ब्रह्मा कमंडलुजलेन तं प्रोक्षितवान् ॥ २२ ॥

ततः स सर्वावयसंपन्नो युवा तप्तहेमाभो वल्मीकात् समुत्थितः सन् ॥ २३ ॥ खे स्थितं ब्रह्माणं दृष्ट्वा शिरसा भूमौ प्रणम्य ॥ २४ ॥ उत्थाय हर्षेण पूर्णाक्षः कृतांजलिः सन् गद्गदया गिरा तुष्टाव ॥ २५ ॥ हिरण्यकशिपुरुवाच । हे देव ! त्वं तमसा व्याप्तं जगत् प्रकटं कृतवान् ॥ २६ ॥ इदं त्वमेव पासि सृजसि नाशयसि । त्रिगुणाश्रयाय तस्मै नमः ॥ २७ ॥ आद्यबीजाय ज्ञानविज्ञानमूर्तये तस्मै नमः ॥ २८ ॥ हे विभो ! त्वं चराचरस्य

स तत्कीचकवल्मीकात् सह ओजोबलान्वितः ॥ सर्वावयवसंपन्नो वज्रसंहननो युवा ॥ उत्थितस्तप्तहेमाभो विभावसुरिवैधसः ॥ २३ ॥ स निरीक्ष्यांबरे देवं हंसवाहमवस्थितम् ॥ ननाम शिरसा भूमौ तद्दर्शनमहोत्सवः ॥ २४ ॥ उत्थाय प्रांजलिः प्रह्व ईक्षमाणो दृशा विभुम् ॥ हर्षाश्रुपुलकोद्भेदो गिरा गद्गदयाऽगृणात् ॥ २५ ॥ हिरण्यकशिपुरुवाच ॥ कल्पांते कालसृष्टेन योंऽधेन तमसा वृतम् ॥ अभिव्यनग् जगदिदं स्वयंज्योतिस्स्वरोचिषा ॥ २६ ॥ आत्मना त्रिवृता चेदं सृजत्यवति लुंपति ॥ रजस्सत्त्वतमोधाम्ने पराय महते नमः ॥ २७ ॥ नम आद्याय बीजाय ज्ञानविज्ञानमूर्तये ॥ प्राणेंद्रियमनोबुद्धिविकारैर्व्यक्तिमीयुषे ॥ २८ ॥ त्वमीशिषे जगतस्तस्थुषश्च प्राणेन मुख्येन पतिः प्रजानाम् ॥ चित्तस्य चित्तेर्मन इंद्रियाणां पतिर्महान्भूतगुणाशयेशः ॥ २९ ॥ त्वं सप्ततंतून्वितनोषि तन्वा त्रय्या चातुर्होत्रकविद्यया च ॥ त्वमेक आत्मात्मवतामनादिरनंतपारः कविरंतरात्मा ॥ ३० ॥ त्वमेव कालोऽनिमिषो जनानामायुर्लवाद्यावयवैः क्षिणोषि ॥ कूटस्थ आत्मा परमेष्ठ्यजो महांस्त्वं जीवलोकस्य च जीव आत्मा ॥ ३१ ॥ त्वत्तः परं नापरमप्यनेजदेजच्च किंचिद्व्यतिरिक्तमस्ति ॥ विद्या कलास्ते तनवश्च सर्वा हिरण्यगर्भोऽसि बृहत्त्रिपृष्ठः ॥ ३२ ॥ व्यक्तं विभो स्थूलमिदं शरीरं येनेंद्रियप्राणमनोगुणांस्त्वम् ॥ भुंक्षे स्थितो धामनि पारमेष्ठ्ये अव्यक्त आत्मा पुरुषः पुराणः ॥ ३३ ॥

जगतो नियंता ॥ २९ ॥ हे ईश ! त्वमेव वेदत्रयरूपेण यज्ञान् विस्तारयसि त्वमेव कालः सन् जनानामायुः क्षिणोषि ॥ ३० ॥ ३१ ॥ कार्यकारणादि सर्वं त्वद्व्यतिरिक्तं नास्ति । वेदोपवेदादयोऽपि तवैव तनवः संति । अतस्त्वं हिरण्यगर्भः ॥ ३२ ॥ हे विभो ! त्वं स्वस्वरूप एव स्थितः सन् स्थूलशरीरेणेन्द्रियादिविषयान् भुंक्षे । अतस्त्वं ब्रह्मैवासि तस्मै नमः ॥ ३३ ॥

१ चत्वारो होता रो यत्र तच्चातुर्होत्रकं तद्विषयकविद्यया । २ स्थावरं जंगमं च । ३ बृहद् ब्रह्म । ४ त्रिगुणात्मकप्रधानस्य पृष्ठे परतः स्थितः ।

हे अनंत ! यस्य तव सूक्ष्मरूपेण विश्वं व्याप्तं तस्मै ते भगवते नमः ॥ ३४ ॥ हे वरदोत्तम ! ईप्सितवरान् यदि दास्यसि तर्हि त्वत्सृष्टेभ्यो मे मृत्युर्मा भूत् ॥३५॥ अन्तर्बहिश्च न । दिवा नक्त च न । त्वद्विसृष्टव्यतिरिक्तात् न आयुधैर्न । भूमावंबरे च न । नरैर्न मृगैर्न ॥३६॥ सप्राणैर्न । अप्राणैर्न । सुरासुरोरगैर्वृक्षपाषाणैश्च मे मृत्युर्माभूत् । युद्धेऽप्रतिद्वंद्वतां लोकानामैकाधिपत्यं च देहि ॥३७॥ लोकपालानां महिमानं तव महिमानं च देहि ॥३८॥ इति श्रीभा० म० चू० सप्तम० तृतीयोऽध्यायः ॥३॥ चतुर्थे तु वरान् लब्ध्वा विजित्याखिललोकपान् । विष्णुद्वेषेण तान् सर्वान्

अनंताव्यक्तरूपेण येनेदमखिलं ततम् ॥ चिदचिच्छक्तियुक्ताय तस्मै भगवते नमः ॥ ३४ ॥ यदि दास्यस्यभिमतान् वरान् मे वरदोत्तम ॥ भूतेभ्यस्त्वद्विसृष्टेभ्यो मृत्युर्माभून्मम प्रभो ॥३५॥ नांतर्बहिर्दिवा नक्तमन्यस्मादपि चायुधैः ॥ न भूमौ नांबरे मृत्युर्न नरैर्न मृगैरपि ॥ ३६ ॥ व्यसुभिर्वाऽसुमद्भिर्वा सुरासुरमहोरगैः ॥ अप्रतिद्वंद्वतां युद्धे ऐकपत्यं च देहिनाम् ॥३७॥ सर्वेषां लोकपालानां महिमानं यथात्मनः ॥ तपोयोगप्रभावानां यन्न रिष्यति कर्हिचित् ॥ ३८ ॥ इति श्रीभा० म० सप्तमस्कंधे हिरण्यकशिपोर्वरयाचनं नाम तृतीयोऽध्यायः ॥ ३ ॥ नारद उवाच ॥ एवं वृतः शत धृतिर्हिरण्यकशिपोरथ ॥ प्रादात् तत्तपसा प्रीतो वरांस्तस्य सुदुर्लभान् ॥१॥ ब्रह्मोवाच ॥ तातेमे दुर्लभाः पुंसां यान् वृणीषे वरान् मम ॥ तथापि वितराम्यंग वरान् यदपि दुर्लभान् ॥ २ ॥ ततो जगाम भगवानमोघानुग्रहो विभुः ॥ पूजितोऽसुरवर्येण स्तूयमानः प्रजेश्वरैः ॥ ३ ॥ एवं लब्धवरो दैत्यो बिभ्रद्धेममयं वपुः ॥ भगवत्यकरोद्द्वेषं भ्रातुर्वधमनुस्मरन् ॥ ४ ॥ स विजित्य दिशः सर्वा लोकांश्च त्रीन् महासुरः ॥ देवासुरमनुष्येंद्रान्गंधर्वगरुडोरगान् ॥ ५ ॥

दैत्येंद्रः समपीडयत् ॥ १ ॥ नारद उवाच । ब्रह्मेत्याकर्ण्य तत्तपसा प्रीतः सन् दुर्लभानपि वरान् प्रादात् ॥ १ ॥ ब्रह्मोवाच । हे तात ! ये इमे मे दुर्लभास्तानपि वरान् ते वितरामि ॥ २ ॥ ततस्तेन पूजितः सन् सत्यलोकं जगाम ॥ ३ ॥ प्राप्तवरो दैत्यो हेममयं वपुर्बिभ्रत् भ्रातुर्वधं स्मरन् भगवति द्वेषं चकार ॥ ४ ॥ ततो लोकत्रयं देवासुरमनुष्येन्द्रान् गंधर्वादीन् ॥ ५ ॥

सिद्धचारणादीन् ऋषिपितृमन्वादीन् यक्षपिशाचादीन् ॥ ६ ॥ सर्वानेतान् जित्वा वशमानीय लोकपालानां स्थानैश्वर्यादीनि जहार॥ ७ ॥देवो
द्यानश्रिया युक्तं विश्वकर्मणा निर्मितं स्वर्गमधिष्ठितवान् ॥ ८ ॥ यत्र प्रवालसोपानाः मारकताः भुवो वैडूर्यस्तंभपंक्तयः॥९॥यत्र मुक्तादामविता
नानि मणिमयासनानि पयः फेननिभाः शय्याः स्वर्णमयाः परिच्छदाः ॥ १० ॥ यत्र देव्यो नूपुरैः शब्दयंति ॥११॥ तस्मिन् महेंद्रभवने सुरा

सिद्धचारणविद्याध्रान्नृषीन् पितृपतीन्न मनून् ॥ यक्षरक्षःपिशाचेशान् प्रेतभूतपतीनथ ॥ ६ ॥ सर्वसत्त्वपतीन् जित्वा
वशमानीय विश्वजित् ॥ जहार लोकपालानां स्थानानि सह तेजसा ॥ ७ ॥ देवोद्यानश्रिया जुष्टमध्यास्ते स्म त्रिवि
ष्टपम् ॥ महेंद्रभवनं साक्षान्निर्मितं विश्वकर्मणा ॥ त्रैलोक्यलक्ष्म्यायतनमध्युवासाऽखिलर्द्धिमत् ॥ ८ ॥ यत्र विद्रुमसो
पाना महामारकता भुवः ॥ यत्र स्फटिककुड्यानि वैडूर्यस्तंभपंक्तयः॥९॥ यत्र चित्रवितानानि पद्मरागासनानि च॥
पयःफेननिभाः शय्या मुक्तादामपरिच्छदाः ॥ १० ॥ कूजद्भिर्नूपुरैर्देव्यः शब्दयंत्य इतस्ततः ॥ रत्नस्थलीषु पश्यंति
सुदतीः सुंदरं मुखम् ॥ ११ ॥ तस्मिन् महेंद्रभवने महाबलो महामना निर्जितलोक एकराट् ॥ रेमेऽभिवंद्यांऽघ्रियुगः
सुरादिभिः प्रतापितैरूर्जितचंडशासनः ॥१२॥तमंग मत्तं मधुनोरुगंधिना विवृत्तताम्राक्षमशेषधिष्ण्यपाः॥ उपासतो
पायनपाणिभिर्विना त्रिभिस्तपोयोगबलौजसां पदम्॥१३॥ जगुर्महेंद्रासनमोजसा स्थितं विश्वावसुस्तुंबुरुरस्मदादयः॥
गंधर्वसिद्धा ऋषयोऽस्तुवन् मुहुर्विद्याधरा अप्सरसश्च पांडव॥१४॥स एव वर्णाश्रमिभिः क्रतुभिर्भूरिदक्षिणैः॥इज्यमानो
हविर्भागानग्रहीत् स्वेन तेजसा॥१५॥अकृष्टपच्या तस्यासीत्सप्तद्वीपवती मही ॥ तथा कामदुघा द्यौस्तु नानाश्चर्यप
दं नभः ॥ १६॥ रत्नाकराश्च रत्नौघास्तत्पत्न्यश्चोहुरूर्मिभिः ॥ क्षारसिंधुघृतक्षौद्रदधिक्षीरामृतोदकाः ॥ १७ ॥

दिभिर्वंदितचरणः सन् रेमे ॥ १२ ॥ हे धर्म ! मद्येन मत्तं तं ब्रह्मविष्णुरुद्रैर्विनेन्द्रादिदेवाः उपायनयुक्तपाणिभिरुपासत ॥ १३ ॥ अस्मदादयो
गंधर्वास्तस्याग्रे जगुः । अप्सरसो ननृतुः ॥ ऋषयस्तुष्टुवुः ॥ १४॥ स एव वर्णाश्रमयुक्तैः प्रजाभिः कृतैर्यज्ञादिभिरिज्यमानो हविर्भागान् जग्राह
॥ १५ ॥ तस्याऽकृष्टपच्या मही जाता । द्यौः कामदुघाऽऽसीत् ॥ १६ ॥ समुद्राः रत्नौघान् ददुः नद्य घृतदुग्धादीनूहुः ॥ १७ ॥

पर्वताः क्रीडास्थानं ददुः । द्रुमाः सर्वर्तुषु पुष्पफलादीन् दधुः । स लोकपालानां पृथग् स्वयमेक एव दधार॥ १८॥एवंस त्रैलोक्यैश्वर्यं भुञ्जन् नातृप्यत॥ १९॥ऐश्वर्यमत्तस्य तस्य महान् कालो गतः॥ २०॥तस्योग्रदंडेनोद्विग्नाःसर्वे लोकपालाःअच्युतं शरणं जग्मुः॥ २१॥ ज्ञानिनो यत्र गत्वा न निवर्वंते तस्यै दिशे नमोऽस्तु॥ २२॥ इति समाहितधियो गतनिद्राःवायुभोजनाःदेवाःहरिं तुष्टुवुः॥ २३॥तदा साधूनामभयंकरी वाणी बभूव॥ २४॥

शैला द्रोणीभिराक्रीडं सर्वर्तुषु गुणान्द्रुमाः ॥ दधार लोकपालानामेक एव पृथग्गुणान् ॥ १८ ॥ स इत्थं निर्जितककुबेकराड्विषयान्प्रियान्॥यथोपजोषं भुंजानो नातृप्यदजितेंद्रियः ॥ १९ ॥ एवमैश्वर्यमत्तस्य दृप्तस्योच्छास्त्रवर्तिनः ॥ कालो महान्व्यतीयाय ब्रह्मशापमुपेयुषः ॥२०॥ तस्योग्रदंडसंविग्नाः सर्वे लोकाः सपालकाः ॥ अन्यत्रालब्धशरणाः शरणं ययुरच्युतम् ॥२१ ॥ तस्यै नमोऽस्तु काष्ठायै यत्रात्मा हरिरीश्वरः ॥ यद्गत्वा न निवर्तंते शांताः संन्यासिनोऽमलाः ॥२२॥ इति ते संयतात्मानः समाहितधियोऽमलाः ॥ उपतस्थुर्हृषीकेशं विनिद्रा वायुभोजनाः ॥ २३ ॥ तेषामाविरभूद्वाणी अरूपा मेघनिस्स्वना ॥ सन्नादयंती ककुभः साधूनामभयंकरी ॥ २४ ॥ माभैष्ट विबुधश्रेष्ठाः सर्वेषां भद्रमस्तु वः ॥ मद्दर्शनं हि भूतानां सर्वश्रेयोपपत्तये ॥ २५ ॥ ज्ञातमेतस्य दौरात्म्यं दैतेयापसदस्य यत् ॥ तस्य शांतिं करिष्यामि कालं तावत् प्रतीक्षत॥२६॥यदा देवेषु वेदेषु गोषु विप्रेषु साधुषु ॥ धर्मे मयि च विद्वेषःस वा आशु विनश्यति॥ २७ ॥ निर्वैराय प्रशांताय स्वसुताय महात्मने ॥ प्रह्लादाय यदा द्रुह्येद्धनिष्येऽपि वरोर्जितम् ॥ २८ ॥ नारद उवाच ॥ इत्युक्ता लोकगुरुणा तं प्रणम्य दिवौकसः ॥ न्यवर्तंत गतोद्वेगा मेनिरे चासुरं हतम् ॥ २९ ॥ तस्य दैत्यपतेः पुत्राश्चत्वारः परमाद्भुताः ॥ प्रह्लादोऽभून्महांस्तेषां गुणैर्महदुपासकः ॥ ३० ॥

हे देवाः मा भैष्ट ॥२५॥तस्यदौरात्म्यं ज्ञातं तच्छांतिं करिष्यामि।तावत्कालं प्रतीक्षत ॥ २६॥यदा देवेषु वेदेषु गोविप्रसाधुषु धर्मे मयि च विद्वेषं करिष्यति तदाऽऽशु विनश्यति ॥ २७ ॥ किं च निर्वैराय शांताय स्वसुतमद्भक्तप्रह्लादाय यदा प्राप्तवरमपि तं हनिष्ये ॥ २८ ॥ नारद उवाच ॥ देवाः इत्याकर्ण्य तं प्रणम्य न्यवर्तंत दैत्यं हतं च मेनिरे ॥२९॥ तस्य दैत्यपतेश्चत्वारः पुत्राः आसन् तेषु प्रह्लादो गुणैर्महानासीत् ॥ ३० ॥

ब्रह्मण्यः सत्यसंधः सर्वप्रियो जितेंद्रियः ॥ ३१ ॥ पितृवद्दीनवत्सलो मानाहंकारवर्जितः॥३२॥ नोद्विग्नचित्तो विषयेषु निस्स्पृहः॥३३॥तस्मात् कवयो मुहुर्महद्गुणान् गृह्णंति ॥ ३४ ॥ सदसि शत्रवोऽपि देवाः यस्य गाथां गायंति मानं च कुर्वंति । भवादृशाः किमु ॥ ३५ ॥ तस्याऽसंख्येयैर्गुणैरलं यस्य वासुदेवे निरंतरं रतिः ॥ ३६ ॥ यो बालोऽपि त्यक्तक्रीडनकः ॥ ३७ ॥ आसीनः पर्यटन् शयानः प्रपिबन् गोविंदेन सहैकी

ब्रह्मण्यः शीलसंपन्नः सत्यसंधो जितेंद्रियः ॥ आत्मवत् सर्वभूतानामेकः प्रियसुहृत्तमः ॥३१॥दासवत् संनतार्यांघ्रिः पितृवद्दीनवत्सलः ॥ भ्रातृवत् सदृशे स्निग्धो गुरुष्वीश्वरभावनः॥विद्यार्थरूपजन्माढ्यो मानस्तंभविवर्जितः ॥ ३२॥ नोद्विग्नचित्तो व्यसनेषु निस्स्पृहः श्रुतेषु दृष्टेषु गुणेष्ववस्तुदृक् ॥ दांतेंद्रियप्राणशरीरधीः सदा प्रशांतकामो र[illegible] रोऽसुरः ॥ ३३ ॥ यस्मिन्महद्गुणा राजन् गृह्यंते कविभिर्मुहुः ॥ न तेऽधुनापि धीयंते यथा भगवतीश्वरे ॥ ३४ ॥ यं साधुगाथा सदसि रिपवोऽपि सुरा नृप ॥ प्रतिमानं प्रकुर्वंति किमुतान्ये भवादृशाः ॥३५॥ गुणैरलमसंख्येयैर्माहात्म्यं तस्य सूच्यते ॥ वासुदेवे भगवति यस्य नैसर्गिकी रतिः ॥३६॥न्यस्तक्रीडनको बालो जडवत् तन्मनस्कया ॥कृष्णग्रहगृहीतात्मा न वेद जगदीदृशम् ॥३७॥आसीनः पर्यटन्नश्नञ्छयानः प्रपिबन् ब्रुवन् ॥ नानुसंधत्त एतानि गोविंदपरिरंभितः ॥ ३८ ॥ क्वचिद्रुदति वैकुंठचिंताशबलचेतनः ॥ क्वचिद्धसति तच्चिंताह्लाद उद्गायति क्वचित ॥ ३९ ॥ नदति क्वचिदुत्कंठो विलज्जो नृत्यति क्वचित्॥ क्वचित् तद्भावनायुक्तस्तन्मयोऽनुचकार ह ॥ ४०॥ क्वचिदुत्पुलकस्तूष्णीमास्ते संस्पर्शनिर्वृतः ॥ अस्पंदप्रणयानंदसलिलामीलितेक्षणः॥ ४१ ॥

कृतः ॥ ३८ ॥ क्वचिद् गोविंदचिंतया रुदति हसति गायति ॥ ३९ ॥ क्वचिद् विलज्जः सन् नृत्यति । क्वचित् तद्भावनया युक्तस्तन्मयो बभूव ॥ ४० ॥ क्वचित् प्रेमानंदेन मीलितेक्षणस्तूष्णीमास्ते ॥ ४१ ॥

१ सन्नताः श्रेष्ठानामंघ्रयो येन सः ।

स भक्त्याऽऽत्मनः सुखं विस्तारयन्नन्यस्य मनसोऽपि शांतिं चकार ॥ ४२ ॥ हे राजन् ! ईदृशे भगवद्भक्ते पुत्रे दैत्यो द्वेषं चकार ॥४३ ॥ युधिष्ठिर उवाच ॥ हे देवर्षे ! साधवे स्वपुत्राय तत्पिता कस्माद् द्वेषं चकार । एतद् ज्ञातुमिच्छामः ॥ ४४ ॥ अप्रतिकूलानपि पुत्रान् पितरः शिक्षार्थं निंदंति । परंतु न घ्नंति ॥४५॥ एवं सति पुत्रद्वेषः पितुर्मरणाय कथं जातः । एतत् कौतूहलं दूरीकुरु ॥ ४६ ॥ इति श्रीभागवते चूर्णिकायां सप्तम० चतुर्थोऽध्यायः ॥४॥ पंचमे गुरुतोऽधीतं त्यक्त्वा विष्णुस्तुतौ रतम् । घातयन् द्विपसर्पाद्यैः सुतं दैत्यो न चाशकत् ॥ १ ॥ नारद उवा

स उत्तमश्लोकपदारविंदयोर्निषेवयाऽकिंचनसंगलब्धया ॥ तन्वन्परां निर्वृतिमात्मनो मुहुर्दुस्संगदीनान्यमनश्शमं व्यधात् ॥४२॥ तस्मिन्महाभागवते महाभागे महात्मनि ॥ हिरण्यकशिपू राजन्नकरोदघमात्मजे ॥ ४३ ॥ युधिष्ठिर उवाच ॥ देवर्ष एतदिच्छामो वेदितुं तव सुव्रत ॥ यदात्मजाय शुद्धाय पिताऽदात्साधवे ह्यघम् ॥४४ । पुत्रान्विप्रतिकूलान्स्वान्पितरः पुत्रवत्सलाः ॥उपालभंते शिक्षार्थं नैवाघमपरो यथा ॥४५ ॥ किमुतानुवशान्साधूंस्तादृशान्गुरुदेवतान् ॥ एतत्कौतूहलं ब्रह्मन्नस्माकं विधम प्रभो ॥ पितुः पुत्राय यद्द्वेषो मरणाय प्रयोजितः ॥ ४६ ॥ इति श्रीभागवते महापुराणे सप्तमस्कंधे प्रह्लादचरित्रे चतुर्थोऽध्यायः॥४॥नारद उवाच॥ पौरोहित्याय भगवान्वृतः काव्यः किलासुरैः॥ शंडामर्कौ सुतौ तस्य दैत्यराजगृहांतिके ॥ १ ॥ तौ राज्ञा प्रापितं बालं प्रह्लादं नयकोविदम् ॥ पाठयामासतुः पा[illegible]न्यांश्चासुरबालकान् ॥२॥ यत्तत्र गुरुणा प्रोक्तं शुश्रुवेनुपपाठ च ॥ न साधु मनसा मेने स्वपरासद्ग्रहाश्रयम् [illegible] एकदाऽसुरराट् पुत्रमंकमारोप्य पांडव ॥पप्रच्छ कथ्यतां वत्स मन्यते साधु यद्भवान् ॥४ ॥ प्रह्लाद उवाच ॥ तत्त साधु मन्येऽसुरवर्य देहिनां सदा समुद्विग्नधियामसद्ग्रहात् ॥ हित्वात्मपातं गृहमंधकूपं वनं गतो यद्धरिमाश्रयेत ॥५॥

च ॥ असुरैः पौरोहित्याय शुक्रो वृतः । तस्य पुत्रौ शडामर्कौ राजगृहसमीपे न्यवसताम् ॥ १ ॥ तौ राज्ञार्पितं प्रह्लादं बालकानितरांश्च पाठयामासतुः ॥ २॥ ताभ्यां प्रोक्तं द्वैतशास्त्रं शुश्रुवे पपाठ च परंतु न साधु मेने ॥ ३ एकदा दैत्येन्द्रः पुत्रमंकमारोप्य पप्रच्छ । हे वत्स त्वं यत् साधु मन्यसे तत् कथय ॥ ४ ॥ प्रह्लाद उवाच ॥ हे दैत्यवर्य ! आत्मपातं गृहांधकूपं हित्वा वनं गत्वा हरिमाश्रयेत । एतत् साधु मन्ये ॥ ५ ॥

नारद उवाच ॥ एवं पुत्रगिरः श्रुत्वा प्रहस्य गुरून् जगाद । अस्य धीर्विष्णुपक्षयथा न भिद्येत तथा स्वगृहे बालो रक्ष्यताम् ॥ ६ ॥ ७ ॥ ततो दैत्ययाजकाः प्रह्लादं गृहमानीय प्रशस्य तं पप्रच्छुः ॥ ८ ॥ हे प्रह्लाद ! सत्यं कथय । बालानतिक्रम्य ते बुद्धिविपर्ययः कुतः ॥ ९ ॥ते बुद्धिभेदः परकृतो वा स्वतः । एतद् वद ॥ १० ॥ प्रह्लाद उवाच ॥ परः स्वः इत्यज्ञानं यस्य मायया भवतां दृष्टं तस्मै भगवते नमः ॥ ११ ॥यदा हरि

नारद उवाच ॥ श्रुत्वा पुत्रगिरो दैत्यः परपक्षसमाहिताः ॥ जहास बुद्धिर्बालानां भिद्यते परबुद्धिभिः ॥ ६ ॥ सम्यग्विधार्यतां बालो गुरुगेहे द्विजातिभिः ॥ विष्णुपक्षैः प्रतिच्छन्नैर्न भिद्येतास्य धीर्यथा ॥ ७ ॥ गृहमानीतमाहूय प्रह्लादं दैत्ययाजकाः ॥ प्रशस्य श्लक्ष्णया वाचा समपृच्छंत सामभिः ॥ ८ ॥ वत्स प्रह्लाद भद्रं ते सत्यं क[illegible] मृषा ॥ बालानति कुतस्तुभ्यमेष बुद्धिविपर्ययः ॥ ९ ॥ बुद्धिभेदः परकृत उताहो ते स्वतोऽभवेत् ॥ भण्यतां श्र[illegible]मानां गुरूणां कुलनंदन ॥ १० ॥ प्रह्लाद उवाच ॥ स्वः परश्चेत्यसद्ग्राहः पुंसां यन्मायया कृतः । विमोहितधियां दृष्टस्तस्मै भगवते नमः ॥ ११ ॥ स यदानुव्रतः पुंसां पशुबुद्धिर्विभिद्यते ॥ अन्य एष तथाऽन्योऽहमिति भेदगताऽसती ॥ १२ ॥ स एष आत्मा स्वपरेत्यबुद्धिभिर्दुरत्ययानुक्रमणो निरूप्यते ॥ मुह्यंति यद्वर्त्मनि वेदवादिनो ब्रह्मादयो ह्येष भिनत्ति मे मतिम् ॥ १३ ॥ यथा भ्राम्यत्ययो ब्रह्मन्स्वयमाकर्षसन्निधौ ॥ तथा मे भिद्यते चेतश्चक्रपाणेर्यदृच्छया ॥ १४ ॥ नारद उवाच ॥ एतावद्ब्राह्मणायोक्त्वा विरराम महामतिः ॥ तं निर्भर्त्स्याथ कुपितः स दीनो राजसेवकः ॥ १५ ॥ आनीयतामरे वेत्रमस्माकमयशस्करः ॥ कुलांगारस्य दुर्बुद्धेश्चतुर्थोऽस्योदितो दमः ॥ १६ ॥

रनुकूलः तदा पुंसा स्वः परः इति बुद्धिभेदो भिद्यते ॥ १२ ॥ यस्य जिज्ञासायां ब्रह्मादयोऽपि मुह्यंति स बुद्धिं भिनत्ति ॥ १३ ॥ यथा लोहं चुंबकस्य सान्निध्याद् भ्रमति तथा चक्रपाणीच्छया मे चेतो भिद्यते ॥ १४ ॥ नारद उवाच ॥ एवमुक्त्वा विरराम । तदा गुरुः कुपितः सन् तं निर्भर्त्स्य जगाद ॥ १५ ॥ अस्माकमयशस्करोऽयं दुर्बुद्धिर्दंडयोग्यः । अतो हे शिष्य ! वेत्रमानीयताम् ॥ १६ ॥

---

१ दुर्घटानुचीरतम् । २ सामदानभेददंडानां मध्ये ।

दैत्यरूपचंदनवने कंटकवृक्षो जातः दैत्यवनोत्पाटने कुठाररूपोस्य विष्णोर्दंण्डरूपोऽयम् ॥ १७ ॥ एवं तं भीषयन् । त्रिवर्गप्रतिपादकशास्त्रमध्यापयामास ॥ १९ ॥ ततो गुरुरधीतं ज्ञात्वा मात्रा वस्त्रालंकारादिभिर्भूषितं बालं दैत्येंद्रं दर्शयामास ॥ १९ ॥ ततो हिरण्यकशिपुः पादयोः पतितं बालमालिंग्यांकमारोप्य जगाद ॥ २० ॥ २१ ॥ हिरण्यकशिपुरुवाच ॥ हे प्रह्लाद ! एतावता कालेन गुरोर्यत् स्वधीतं तदुच्यताम् ॥ २२ ॥

दैतेयचंदनवने जातोऽयं कंटकद्रुमः॥ यन्मूलोन्मूलपरशोर्विष्णोर्नालायितोऽर्भकः ॥१७॥ इति तं विविधोपायैर्भीषयंस्तर्जनादिभिः ॥प्रह्लादं ग्राहयामास त्रिवर्गस्योपपादनम् ॥१८॥ तत एनं गुरुर्ज्ञात्वा ज्ञातज्ञेयचतुष्टयम्॥ दैत्येन्द्रं दर्शयासास मातृमृष्टमलंकृतम्॥१९॥पादयोःपतितं बालं प्रतिनंद्याशिषासुरः॥परिष्वज्य चिरं दोर्भ्यांपरमामाप निर्वृतिम् ॥२०॥अरोप्यांकमवघ्राय मूर्धन्यश्रुकलांबुभिः॥आसिंचन् विकसद्वक्त्रमिदमाह युधिष्ठिर ॥२१॥ हिरण्यकशिपुरुवाच प्रह्लादानूच्यतां तात स्वधीतं किंचिदुत्तमम्॥ कालेनैतावताऽऽयुष्मन् यदशिक्षद् गुरोर्भवान् ॥ २२ ॥ प्रह्लाद उवाच ॥ श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ॥ अर्जनं वंदनं दास्यं सख्यमात्मनिवेदनम् ॥ २३ ॥ इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा॥ क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम्॥२४॥ निशम्यैतत् सुतवचो हिरण्यकशिपुस्त[illegible]॥ गुरुपुत्रमुवाचेदं रुषा प्रस्फुरिताधरः ॥ २५ ॥ ब्रह्मबंधो किमेतत्ते विपक्षं श्रयताऽसता ॥ असारं ग्राहितो बाले[illegible]नादृत्य दुर्मते ॥ २६ ॥ संति ह्यसाधवो लोके दुर्मैत्राश्छद्मवेषिणः ॥ तेषामुदेत्यघं काले रोगः पातकिनामिव ॥२७॥

प्रह्लाद उवाच ॥ हे तात ! विष्णोः श्रवणं १ कीर्तनं २ स्मरणं ३ पादसेवनम् ४ अर्जनं ५ वंदनं ६ दास्यं ७ सख्यं ८ स्वदेहसमर्पणम् ९ ॥ २३ ॥ इति नवलक्षणा भक्तिर्विष्णौ क्रियते । तदुत्तममधीतं मन्ये ॥ २४ ॥ एवं पुत्रवचः श्रुत्वा क्रोधेन स्फुरिताधरो दैत्यो गुरुपुत्रं जगाद ॥ ॥ २५ ॥ हे ब्रह्मबंधो मामनादृत्य पुत्रः किमसारं ग्राहितः ॥ २६ ॥ यस्मिन् लोके कापटचवेषधारिणोऽसाधवो बहवः संति ॥ २७ ॥

१ उपायचतुष्टयम् ।

गुरुपुत्र उवाच । हे इंद्रशत्रो ! तव सुतो मत्प्रणीतं परप्रणीतं च न वदति । अस्येयं स्वाभाविकी मतिः । अतो मयि क्रोधं मा कुरु ॥२८॥ नारद उवाच ॥ एवं गुरूक्तं श्रुत्वा पुत्रं जगाद । हे पुत्र ! इयं ते बुद्धिर्गुरुमुखी न चेत्तर्हि कुतः प्राप्ता॥२९॥प्रह्लाद उवाच ॥ हे पितः ! श्रीकृष्णे मतिः परतः स्वतो वा सत्संगं विना नोत्पद्यते ॥ ३० ॥ ये बहिरर्थमानिनस्ते स्वार्थगतिं न विदुः ॥३१॥ यावत् साधूनां पादसेवनं न करोति तावत्

गुरुपुत्र उवाच ॥ न मत्प्रणीतं न परप्रणीतं सुतो वदत्येष तवेंद्रशत्रो ॥ नैसर्गिकीयं मतिरस्य राजन् नियच्छ मन्युं कददाः स्म मा नः॥२८॥नारद उवाच ॥गुरुणैवं प्रतिप्रोक्तो भूय आहासुरस्सुतम्॥ न चेद्गुरुमुखीयं ते कुतोऽभद्राऽसती मतिः॥२९॥प्रह्लाद उवाच ॥ मतिर्न कृष्णे परतः स्वतो वा मिथोभिपद्येत गृहव्रतानाम्॥ अदांतगोभिर्विशतां तमिस्रं पुनः पुनश्चर्वितचर्वणानाम्॥३०॥न ते विदुः स्वार्थगतिं हि विष्णुं दुराशया ये बहिरर्थमानिनः॥अंधा यथ पनीयमाना वागीशतंत्यामुरुदाम्नि बद्धाः॥३१॥ नैषां मतिस्तावदुरुक्रमांघ्रिं स्पृशत्यनर्थापगमो यदर्थः महीयसां पादरजोभिषेकं निष्किंचनानां न वृणीत यावत्॥ ३२ ॥ इत्युक्त्वोपरतं पुत्रं हिरण्यकशिपू रुषा ॥ अंधीकृतात्मा स्वोत्संगान्निरस्यत महीतले ॥३३॥ आहामर्षरुषाविष्टः कषायीभूतलोचनः॥वध्यतामाश्वयं वध्यो निस्सारयत नैर्ऋताः ॥३४॥ अयं मे भ्रातृहा सोऽयं हित्वा स्वान् सुहृदोऽधमः ॥ पितृव्यहंतुर्यः पादौ विष्णोर्दासवदर्चति ॥ ३५॥ विष्णोर्वा साध्वसौ किं नु करिष्यत्यसमंजसः ॥ सौहृदं दुस्त्यजं पित्रोरहाद्यः पंचहायनः ॥३६॥ परोप्यपत्यं हितकृद् यथौषधं स्वदेहजोप्यामयवत् सुतोऽहितः॥छिंद्यात्तदंगं यदुतात्मनोऽहितं शेषं सुखं जीवति यद्विवर्जनात्॥३७॥

कृष्णे मतिर्नो जायते ॥ ३२॥ तदा दैत्यः एवं वचो निशम्य पुत्रं स्वोत्संगात् महीतले त्यक्त्वा राक्षसानुवाच ॥ ३३ ॥ हे राक्षसाः ! अयं वध्यतां वा निस्सार्यतां वा ॥ ३४ ॥ यः पितृव्यहंतुर्विष्णोः पादौ दासवदर्चति ॥३५ ॥ योऽयं पंचहायनः पित्रोः सौहृदं जहौ ॥ ३६ ॥ परोपि हितकृच्चेत् सुतो ज्ञेयः ।स्वदेहजोपि न तथा चेद् रोग इव ज्ञेयः ॥ ३७ ॥

१ गावः इन्द्रियाणि । २ संसारम् ।

अतोऽयं सर्वैरुपायैर्हंतव्यः॥३८॥तदा ते राक्षसाः शूलपाणयो भर्त्राऽऽदिष्टाः ॥३९ ॥ नदंतश्छिंधि भिंधीति वादिनः संतः आसीनं प्रह्लादं शूलैः सर्वमर्मसु जघ्नुः ॥ ४० ॥तथापि महाभागवते ब्रह्मणि समाहितात्मनि प्रह्लादे तेषां प्रहाराः निष्फलाः आसन् ॥४१॥तस्मिन् प्रयासे नष्टे सति दैत्येंद्रस्तद्वधोपायान् चकार ॥ ४२ ॥ दिग्गजैर्दंदशूकैरभिचारैर्गिरिशृंगात् पातैर्मायाभिर्विषदानैरभोजनैः ॥ ४३ ॥ हिमवाय्वग्निजलाद्भिरु

सर्वैरुपायैर्हंतव्यः संभोजशयनासनैः ॥ सुहृल्लिंगधरः शत्रुर्मुनेर्दुष्टमिवेन्द्रियम् ॥ ३८॥ नैर्ऋतास्ते समादिष्टा भर्त्रा वै शूलपाणयः॥ तिग्मदंष्ट्रकरालास्यास्ताम्रश्मश्रुशिरोरुहाः ॥ ३९ ॥ नदंतो भैरवान् नादांश्छिंधि भिंधीति वादिनः ॥ आसीनं चाहनञ्छूलैः प्रह्लादं सर्वमर्मसु ॥४०॥ परे ब्रह्मण्यनिर्देश्ये भगवत्यखिलात्मनि ॥ युक्तात्मन्यफला आसन्नपुण्यस्येव सत्क्रियाः॥४१॥प्रयासेऽपहते तस्मिन् दैत्येंद्रः परिशंकितः ॥ चकार तद्वधोपायान् निर्बंधेन युधिष्ठिर ॥४२॥ दिग्गजैर्दंदशूकैश्च अभिचारावपातनैः ॥ मायाभिः संनिरोधैश्च गरदानैरभोजनैः॥४३॥ हिमवाय्वग्निसलिलैः पर्वताक्रमणैरपि ॥ न शशाक यदा हंतुमपापमसुराः सुतम् ॥ चिन्तां दीर्घतमां प्राप्तस्तत्कर्तुं नाभ्यपद्यत॥४४॥ एष मे बह्वसाधूक्तो वधोपायाश्च निर्मिताः ॥ तैस्तैर्द्रोहैरसद्धर्मैर्मुक्तः स्वेनैव तेजसा ॥४५॥ वर्तमानोविदूरे वै बालोप्यजडधीरयम् ॥ न विस्मरति मेऽनार्यं शुनश्शेप इव प्रभुः ॥४६ ॥ अप्रमेयाऽनुभावोऽयमकुतश्चिद्भयोऽमरः ॥ नूनमेतद्विरोधेन मृ… म भविता न वा ॥४७ ॥ इति तं चिंतया किंचद् म्लानश्रियमधोमुखम् ॥ शंडामर्कावौशनसौ विविक्त इति हो… ॥४८॥जितं त्वयैकेन जगत्त्रयं भ्रुवोर्विजृंभणत्रस्तसमस्तधिष्ण्यपम् ॥ न तस्य चिंत्यं तव नाथ चक्ष्महे न वै शिशूनां गुणदोषयोः पदम् ॥ ४९ ॥

पायैर्निष्पापं सुतं हंतुं न शशाक तदा दीर्घचिंतां प्राप्तः आह ॥ ४४ ॥मयाऽस्य वधोपायाः बहवः कृताः तथापि एष स्वतेजसैव मुक्तः ॥४५॥ अयं समीपे वसन्नपि मे निंद्यकर्म न स्मरति नम्रवचो वदति॥४६॥अतोऽमरः किम् अस्य विरोधेन मे मृत्युर्भविष्यति किम्॥४७॥ इति चिंतयाऽधोमुखं दैत्यं शंडामर्कावूचतुः॥४८॥ हे नाथ ! त्वयैकेन जगत्त्रयं जितम् तव तु चिंत्यं न पश्यामः।अतः शिशोर्गुणदोषौ न चिंतनीयौ॥४९॥

एनं वरुणपाशैर्बद्ध्वा यावद् भार्गवः आगमिष्यति तावद् निधेहि॥५० ॥ राजा तथेत्युक्त्वा जगाद । अस्य राज्ञां धर्माः उपदेष्टव्याः॥५१॥तदा गुरू त्रिवर्गोपपादकं शास्त्रं दैत्यबालकैः सह तमध्यापयताम् ॥५२॥ प्रह्लादो गुरुशिक्षितं साधु न मेने ॥५३॥ यदाऽऽचार्यो गृहकर्मसु गतस्तदा प्राप्तावसरैर्बालकैः क्रीडार्थमाहूतः ॥५४॥ प्रह्लादःस्वयमेव तानाहूय जगाद ॥५५॥ हे बालाः ! प्रह्लादस्य गौरवात् त्यक्तक्रीडनकाःसंतः ॥५६ ॥

इमं तु पाशैर्वरुणस्य बद्ध्वा निधेहि भीतो न पलायते यथा ॥ बुद्धिश्च पुंसो वयसार्यसेवया यावद्गुरुर्भार्गव आगमिष्यति ॥ ५०॥तथेति गुरुपुत्रोक्तमनुज्ञायेदमब्रवीत् ॥ धर्मा ह्यस्योपदेष्टव्या राज्ञां ये गृहमेधिनाम् ॥ ५१ ॥धर्ममर्थं च कामं च नितरां चानुपूर्वशः॥ प्रह्लादायोचतू राजन् प्रश्रयावनताय च ॥५२॥ यथा त्रिवर्गं गुरुभिरात्मने उपशिक्षितम् न साधु मेने तच्छिक्षां द्वंद्वारामोपवर्णिताम् ॥ ५३ ॥ यदाचार्यः परावृत्तो गृहमेधीयकर्मसु ॥ वयस्यैर्बालकैस्तत्र सोपहूतः कृतक्षणैः ॥५४॥ अथ तान् श्लक्ष्णया वाचा प्रत्याहूय महाबुधः॥उवाच विद्वांस्तन्निष्ठां कृपया प्रहसन्निव ॥५५॥ ते तु तद्गौरवात्सर्वे त्यक्तक्रीडापरिच्छदाः ॥ बाला न दूषितधियो द्वंद्वारामेरितेहितैः ॥ ५६ ॥ पर्युपासत राजेंद्र तन्न्यस्तहृदयेक्षणाः ॥ तानाह करुणो मैत्रो महाभागवतोऽसुरः ॥ ५७ ॥ इति श्रीभागवते महापुराणे सप्तमस्कंधे पंचमोऽध्यायः ॥ ५ ॥ प्रह्लाद उवाच ॥ कौमार आचरेत् प्राज्ञो धर्मान् भागवतानिह ॥ दुर्लभं मानुषं जन्म तदप्यध्रुवमर्थदम् ॥ १ ॥ यथा हि पुरुषस्येह विष्णोः पादोपसर्पणम् ॥ यदेष सर्वभूतानां प्रिय आत्मेश्वरः सुहृत् ॥ २ ॥

तं पर्युपासत । ततो महाभागवतः प्रह्लादस्तान् बालानाह ॥ ५७ ॥ इति श्रीभागवते चू० सप्तम० पंचमोऽध्यायः ॥५॥षष्ठे गुरौ गृहव्यग्रे प्रह्लादो दैत्यबालकान् । अनुकंप्य परं तंत्रं नारदोक्तमुपादिशत् ॥१॥ निरर्थकक्रियालापैरायुर्व्ययमजानताम्। प्रह्लादः सदयं प्राह धर्मं भागवतं कृती॥२॥ प्रह्लाद उवाच॥हे बालकाः! प्राज्ञःकौमारे एव भगवद्धर्मानाचरेत्।इह मानुष्यं जन्म दुर्लभम् अर्थदं च॥१॥अतो विष्णोः पादसेवनं योग्यम्॥२॥

१ रागद्वेषादिष्वारमणं येषां तैः ॥

